# चम्पूरामायणे

# बालकाण्डम्

२८ – ०९.०७.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# पुनरावर्तनम्

- भागीरथीकथा
  - मनोरमा-हिमवन्तौ, तयोः कन्याद्वयम्
  - गङ्गा लोकहितार्थं दैवतैर्नीता स्वर्णदी जाता
  - उमा शङ्करेणोढा
  - शिवयोः वीर्यं भूमौ पतितम् अग्निना स्वीकृतम्

Vyoma ॥वाचं धेनुमुपासीत॥ Samskritam-Value Education-Technology

# अनपत्यानथामर्त्यान्बहुभार्यां च मेदिनीम् ।
# अकरोदम्बिकाक्रोधः पुत्रालाभसमुद्भवः ॥५९॥

- अनपत्यान्, अथ, अमर्त्यान्, बहुभार्याम्, च, मेदिनीम्, अकरोत्, अम्बिका-क्रोधः, पुत्र-अलाभ-समुद्भवः
- अथ = शिवस्य वीर्ये भूमौ पतिते सति
- अकरोत् = व्यदधात्
- कः अकरोत्? अम्बिकाक्रोधः = पार्वत्याः रोषः

अनपत्यानथामर्त्यान्बहुभार्यां च मेदिनीम् ।
अकरोदम्बिकाक्रोधः पुत्रालाभसमुद्भवः ॥५९॥

- कीदृशः अम्बिकाक्रोधः? पुत्रालाभसमुद्भवः = तनयस्य अप्राप्त्या उत्पन्नः
- किम् अकरोत्? अमर्त्यान् = देवान्, अनपत्यान् = सन्तानहीनान्
- मेदिनीं = भूमिम्, बहुभार्याम् = अनेकपत्नीम् च

अनपत्यानथामर्त्यान्बहुभार्यां च मेदिनीम् ।
अकरोदम्बिकाक्रोधः पुत्रालाभसमुद्भवः ॥५९॥

- अन्वयः – अथ पुत्रालाभसमुद्भवः अम्बिकाक्रोधः अमर्त्यान् अनपत्यान्, मेदिनीं बहुभार्यां च अकरोत् ।
- तात्पर्य्यम् – शिवस्य वीर्ये भूमौ पतिते सति, तनयस्य अप्राप्त्या उत्पन्नः पार्वत्याः रोषः देवान् सन्तानहीनान्, भूमिम् अनेकपत्नीं च व्यदधात् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam -Value Education...

# अनपत्यानथामर्त्यान्बहुभार्यां च मेदिनीम् ।
# अकरोदम्बिकाक्रोधः पुत्रालाभसमुद्भवः ॥५९॥

- अथ शैलसुता राम त्रिदशानिदमब्रवीत् । समन्युरशपत्सर्वान् क्रोधसंरक्तलोचना ॥
- यस्मान्निवारिता चैव सङ्गतिः पुत्रकाम्यया । अपत्यं स्वेषु दारेषु तस्मान्नोत्पादयिष्यथ ।
- अद्यप्रभृति युष्माकमप्रजास्सन्तु पत्नयः ॥
- एवमुक्त्वासुरान् सर्वान् शशाप पृथिवीमपि। अवने नैकरूपा त्वं बहुभार्या भविष्यसि ॥
- न च पुत्रकृतां प्रीतिं मत्क्रोधकलुषीकृता । प्राप्स्यसि त्वं सुदुर्मेधे मम पुत्रमनिच्छती ॥

॥ बाल० ३६.२०-२४ ॥

अनपत्यानथामर्त्यान्बहुभार्यां च मेदिनीम् ।
अकरोदम्बिकाक्रोधः पुत्रालाभसमुद्भवः ॥५९॥

- अनपत्यान् – अविद्यमानानि अपत्यानि येषां ते, तान् ।
- अमर्त्यान् – “आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः” (अमरः)
- बहुभार्याम् – बहूनां भार्या, ताम्
- मेदिनीम् – “गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही” (अमरः)
- अकरोत् – डुकृञ् करणे – लङ्, प्रथम.१

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

# अनपत्यानथामर्त्यान्बहुभार्यां च मेदिनीम् ।
# अकरोदम्बिकाक्रोधः पुत्रालाभसमुद्भवः ॥५९॥

- अम्बिकाक्रोधः - अम्बिकायाः क्रोधः । "अपर्णा पार्वती दुर्गा मृडानी चण्डिकाम्बिका", "कोप-क्रोध-अमर्ष-रोष-प्रतिघा रुट्-क्रुधौ स्त्रियौ" (अमरः)
- पुत्रालाभसमुद्भवः – न लाभः । पुत्रस्य अलाभः । पुत्रालाभः समुद्भवः यस्य सः ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education

# अथ सेनान्यमिच्छद्भिरुक्तः सब्रह्मभिः सुरैः।
# वह्निरह्नाय जाह्नव्यां न्यषिञ्चद्वीर्यमैश्वरम् ॥६०॥

- अथ, सेनान्यम्, इच्छद्भिः, उक्तः, सब्रह्मभिः, सुरैः, वह्निः, अह्नाय, जाह्नव्याम्, न्यषिञ्चत्, वीर्यम्, ऐश्वरम्
- अथ = ततः
- न्यषिञ्चत् = स्थापयामास
- किं न्यषिञ्चत्? वीर्यम् = रेतोरूपं तेजः
- कीदृशं वीर्यम्? ऐश्वरम् = ईश्वरस्य

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# अथ सेनान्यमिच्छद्भिरुक्तः सब्रह्मभिः सुरैः।
# वह्निरह्नाय जाह्नव्यां न्यषिञ्चद्वीर्यमैश्वरम् ॥६०॥

- कस्यां न्यषिञ्चत्? जाह्नव्याम् = गङ्गायाम्
- कथं न्यषिञ्चत्? अह्नाय = झटिति
- कः न्यषिञ्चत्? वह्निः = अग्निः
- कीदृशः वह्निः न्यषिञ्चत्? सुरैः उक्तः = देवैः सूचितः

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education

# अथ सेनान्यमिच्छद्भिरुक्तः सब्रह्मभिः सुरैः।
# वह्निरह्नाय जाह्नव्यां न्यषिञ्चद्वीर्यमैश्वरम् ॥६०॥

- कीदृशैः सुरैः? सेनान्यम् इच्छद्भिः, सब्रह्मभिः
- सेनान्यम् = सेनापतिम्, इच्छद्भिः = कामयमानैः
- सब्रह्मभिः = ब्रह्मसहितैः

अथ सेनान्यमिच्छद्भिरुक्तः सब्रह्मभिः सुरैः।
वह्निरह्नाय जाह्नव्यां न्यषिञ्चद्वीर्यमैश्वरम् ॥६०॥

- अन्वयः – अथ सेनान्यम् इच्छद्भिः सब्रह्मभिः सुरैः उक्तः वह्निः ऐश्वरं वीर्यम् अह्नाय जाह्नव्यां न्यषिञ्चत् ।
- तात्पर्य्यम् – ततः सेनापतिं कामयमानैः ब्रह्मसहितैः देवैः सूचितः अग्निः ईश्वरस्य रेतोरूपं तेजः झटिति गङ्गायां स्थापयामास ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education...

# अथ सेनान्यमिच्छद्भिरुक्तः सब्रह्मभिः सुरैः।
# वह्निरह्नाय जाह्नव्यां न्यषिञ्चद्वीर्यमैश्वरम् ॥६०॥

- सेनान्यम् – ईकारान्तः, पुंलिङ्गः, "सेनानी"शब्दः, २.१
- इच्छद्भिः – "इष इच्छायाम्" + शतृ । तकारान्तः, पुं, ३.३
- उक्तः – "वच परिभाषणे" + क्त ।
- सब्रह्मभिः – ब्रह्मणा सह वर्तन्ते इति सब्रह्माणः, तैः । नकारान्तः, पुं, ३.३
- वह्निः – "अग्निर्वैश्वानरो वह्निः वीतिहोत्रो धनञ्जयः" (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education ...

# अथ सेनान्यमिच्छद्भिरुक्तः सब्रह्मभिः सुरैः।
# वह्निरह्नाय जाह्नव्यां न्यषिञ्चद्वीर्यमैश्वरम् ॥६०॥

- अह्नाय – अव्ययम् ।
- जाह्नव्याम् – जह्नोः अपत्यम् – जह्नु + अण् + ङीप् । ईकारान्तः, स्त्री, ७.१
- न्यषिञ्चत् – नि + “षिच क्षरणे” – लङ्, प्रथम.१
- ऐश्वरम् – ईश्वरस्य इदम् – ईश्वर + अण्

Vyoma ॥वाचं धेनुमुपासीत॥ Samskritam -Value Educ

# सापि सप्तार्चिषा क्षिप्तं तेजस्तद्वोढुमक्षमा।
# हिमवत्प्रान्तकान्तारे श्रान्ता शरवणे जहौ॥६१॥

- सा, अपि, सप्त-अर्चिषा, क्षिप्तम्, तेजः, तत्, वोढुम्, अक्षमा, हिमवत्-प्रान्त-कान्तारे, श्रान्ता, शर-वणे, जहौ
- जहौ = त्यक्तवती
- का जहौ? सा = गङ्गा
- कीदृशी सा? श्रान्ता = परिक्लान्ता

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Educ

# सापि सप्तार्चिषा क्षिप्तं तेजस्तद्वोढुमक्षमा।
# हिमवत्प्रान्तकान्तारे श्रान्ता शरवणे जहौ॥६१॥

- पुनः कीदृशी सा? अक्षमा = असमर्था
- किंकर्तुम् अक्षमा? वोढुम् = धारयितुम्
- किं वोढुम्? तत् तेजः = शिवस्य वीर्यम्
- कीदृशं तेजः? क्षिप्तम् = न्यस्तम्
- केन क्षिप्तम्? सप्तार्चिषा = अग्निना

# सापि सप्तार्चिषा क्षिप्तं तेजस्तद्वोढुमक्षमा।
# हिमवत्प्रान्तकान्तारे श्रान्ता शरवणे जहौ॥६१॥

- कुत्र जहौ? शरवणे = शरप्रचुरे वने
- कीदृशे शरवणे? हिमवत्प्रान्तकान्तारे = हिमालयस्य समीपस्थे अरण्ये
- अन्वयः – सापि सप्तार्चिषा क्षिप्तं तत् तेजः वोढुम् अक्षमा श्रान्ता हिमवत्प्रान्तकान्तारे शरवणे जहौ ।
- तात्पर्य्यम् – गङ्गापि अग्निना न्यस्तं शिवस्य वीर्यं धारयितुम् असमर्था, परिक्लान्ता सती, हिमालयस्य समीपस्थे शरप्रचुरे वने त्यक्तवती ।

Vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Educ

# सापि सप्तार्चिषा क्षिप्तं तेजस्तद्वोढुमक्षमा।
# हिमवत्प्रान्तकान्तारे श्रान्ता शरवणे जहौ॥६१॥

- सप्तार्चिषा – सकारान्तः, पुं, ३.१ । "सप्तार्चिः दमुनाः शुक्रः चित्रभानुः विभावसुः" (अमरः)
- वोढुम् – "वह प्रापणे" + तुमुन्
- जहौ – "ओहाक् त्यागे" – लिट्, प्रथम.१

# तत्राभूत्कृत्तिकाप्रीत्यै षोढारूढमुखाम्बुजम्।
# तारकध्वान्तविध्वंसि सद्यः षाण्मातुरं महः॥६२॥

- तत्र, अभूत्, कृत्तिका-प्रीत्यै, षोढा-आरूढ-मुख-अम्बुजम्, तारक-ध्वान्त-विध्वंसि, सद्यः, षाण्मातुरम्, महः
- तत्र = तस्मिन् शरवणे
- अभूत् = जातम्
- कदा अभूत्? सद्यः = तत्क्षणम्
- किम् अभूत्? महः = तेजः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

# तत्राभूत्कृत्तिकाप्रीत्यै षोढारूढमुखाम्बुजम्।
# तारकध्वान्तविध्वंसि सद्यः षाण्मातुरं महः॥६२॥

- कीदृशं महः? षोढारूढमुखाम्बुजम्, तारकध्वान्तविध्वंसि, षाण्मातुरम्
- षोढारूढमुखाम्बुजम् = षड्भिः प्रकारैः प्रादुर्भूतानि मुखकमलानि यस्य तथोक्तम्
- किमर्थं षोढारूढमुखाम्बुजम्? कृत्तिकाप्रीत्यै = स्तन्यप्रदानार्थं देवैः प्रेषितानां षण्णां कृत्तिकानां परितोषार्थम्
- षाण्मातुरम् = षण्णां मातृणाम् अपत्यम्, कार्त्तिकेयरूपम्
- तारकध्वान्तविध्वंसि = तारकासुररूपस्य अन्धकारस्य विनाशकम्

vyoma ॥ वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

# तत्राभूत्कृत्तिकाप्रीत्यै षोढारूढमुखाम्बुजम्।
# तारकध्वान्तविध्वंसि सद्यः षाण्मातुरं महः॥६२॥

- अन्वयः – तत्र कृत्तिकाप्रीत्यै षोढारूढमुखाम्बुजम्, षाण्मातुरम्, तारकध्वान्तविध्वंसि महः सद्यः अभूत् ।
- तात्पर्य्यम् – तस्मिन् शरवणे षण्णां कृत्तिकानां परितोषार्थं षट् मुखानि बिभ्रत्, तारकासुररूपस्य अन्धकारस्य विनाशकं, कार्त्तिकेयरूपं तेजः तत्क्षणं जातम् ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

तत्राभूत्कृत्तिकाप्रीत्यै षोढारूढमुखाम्बुजम्।
तारकध्वान्तविध्वंसि सद्यः षाण्मातुरं महः॥६२॥

- कृत्तिकाप्रीत्यै – कृत्तिकानां प्रीतिः, तस्यै
- षोढारूढमुखाम्बुजम् – षोढा आरूढानि, मुखम् एव अम्बुजम्, षोढारूढानि मुखाम्बुजानि यस्य तत्
- तारकध्वान्तविध्वंसि – नकारान्तः, नपुं, १.१ । तारकः एव ध्वान्तः, तारकध्वान्तं विध्वंसयति । “अन्धकारोऽस्त्रियां ध्वान्तं तमिस्त्रं तिमिरं तमः” (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# तत्राभूत्कृत्तिकाप्रीत्यै षोढारूढमुखाम्बुजम्।
# तारकध्वान्तविध्वंसि सद्यः षाण्मातुरं महः॥६२॥

- सद्यः – अव्ययम् । "सद्यः सपदि तत्क्षणे" (अमरः)
- षाण्मातुरम् – षण्णां मातृणाम् अपत्यम् । तद्धितार्थद्विगुः । षण्मातृ+अण् । "षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः" (अमरः)
- महः – सकारान्तः, नपुं, १.१ । "महस्तूत्सवतेजसोः" (अमरः)

vyoma
॥ वाचं ... ॥
Samskritam -Value Education- ...

# त्रैविध्यं श्रूयतां वत्स सरितस्त्रिदिवौकसाम्।
# यथोक्तं हव्यमश्नन्त्या देवताया इवाध्वरे॥६३॥

- त्रैविध्यम्, श्रूयताम्, वत्स, सरितः, त्रि-दिव-ओकसाम्, यथा-उक्तम्, हव्यम्, अश्नन्त्याः, देवतायाः, इव, अध्वरे
- वत्स! = रामभद्र!
- श्रूयताम् = आकर्ण्यताम्
- किं श्रूयताम्? त्रैविध्यम् = त्रिप्रकारकत्वम्

vyoma
॥ वाचं ... ॥
Samskritam - Value Education ...

# त्रैविध्यं श्रूयतां वत्स सरितस्त्रिदिवौकसाम्।
# यथोक्तं हव्यमश्नन्त्या देवताया इवाध्वरे॥६३॥

- कस्याः त्रैविध्यम्? त्रिदिवौकसाम् = देवानाम्, सरितः = नद्याः । देवनद्याः गङ्गायाः
- कस्याः इव त्रैविध्यम्? देवतायाः = अग्नेः इव
- कीदृश्याः देवतायाः? हव्यम् = आज्यादिकम्, अश्नन्त्याः = भुञ्जानायाः
- कीदृशं हव्यम्? अध्वरे = यागे, यथोक्तम् = शास्त्रविहितम्

त्रैविध्यं श्रूयतां वत्स सरितस्त्रिदिवौकसाम्।
यथोक्तं हव्यमश्नन्त्या देवताया इवाध्वरे॥६३॥

- अन्वयः – वत्स! अध्वरे यथोक्तं हव्यम् अश्नन्त्याः देवतायाः इव त्रिदिवौकसां सरितः त्रैविध्यं श्रूयताम् ।
- तात्पर्य्यम् – यज्ञेषु शास्त्रविहितं हविः भुञ्जानस्य अग्नेः इव देवनद्याः गङ्गायाः त्रिप्रकारकत्वम् आकर्णय । [गार्हपत्य-आहवनीय-दक्षिणाग्निभेदेन यथा अग्नेः त्रैविध्यम्, तथा स्वर्लोक-भूलोक-पातालगामित्वेन गङ्गायाः अपि त्रैविध्यम्]

vyoma ॥वाचं वदामि॥ Samskritam - Value Education - Technology

# त्रैविध्यं श्रूयतां वत्स सरितस्त्रिदिवौकसाम्।
# यथोक्तं हव्यमश्नन्त्या देवताया इवाध्वरे॥६३॥

- त्रैविध्यम् – त्रयः विधाः यस्य सः त्रिविधः । त्रिविधस्य भावः ।
- श्रूयताम् – "श्रु श्रवणे" – कर्मणि लोट्, प्रथम.१
- सरितः – तकारान्तः, स्त्री, ६.१ । "नदी सरित् । तरङ्गिणी शैवलिनी..."
- त्रिदिवौकसाम् – सकारान्तः, पुं, ६.३ । त्रिदिवः = स्वर्गः ओकः = स्थानं येषां ते त्रिदिवौकसः । "स्वरव्ययं स्वर्ग-नाक-त्रिदिव-त्रिदशालयाः" (अमरः)

Vyoma
Samskrtam - Value Education

# त्रैविध्यं श्रूयतां वत्स सरितस्त्रिदिवौकसाम्।
# यथोक्तं हव्यमश्नन्त्या देवताया इवाध्वरे॥६३॥

- यथोक्तम् – उक्तम् अनतिक्रम्य । अव्ययीभावः ।
- अश्नन्त्याः – “अश भोजने” + शतृ + ङीप् । ईकारान्तः, स्त्री, ६.१ ।
- अध्वरे – अकारान्तः, पुं, ७.१ । “यज्ञः सवोऽध्वरो यागः” (अमरः)

# सङ्क्षेपः

- क्रोधेन पार्वत्याः शापः
- अग्निना गङ्गायां वीर्यन्यासः
- गङ्गया शरवणे वीर्यत्यागः
- कार्त्तिकेयस्य उत्पत्तिः
- गङ्गावतरणकथारम्भः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in